हा·र·
उ·
२ई

नदिनादिना ५२।१०।४७।२१२५ वामितान्क्रमेणैकैकस्य दशा वर्षे स्यात् अथादिमदशाधीशस्य दशागतगम्यकालानय
नं तत्र पंचभक्तशेषं १।१६ गतसंतेपञ्चसु हीनं ३।५४ जातङ्गम्यसंज्ञं अथ गतं १।१६ वर्षादि ७ लवेन ५।१२५।४२।५९।
२५ गोमूत्रिकया गुणितं षष्ट्योपर्युपरि युतं ५६।३४।१७।८।३१।३० पञ्चभक्तं लब्धं आद्यदशापतेर्दिनाद्यं दशामानङ्गतसं
ज्ञं ११।१८ ५।१२५।४२।४२ अथ गम्यं ३।५४ वर्षादि लवगुणं षष्ट्योपर्युपरि युतं २००।३४।१७।८।३१।३० पञ्चभक्तं ल
ब्धमाद्यदशापतेर्दिनादि दशामानं गम्याभिधं ४०।६।५।१२५।४२।१८ अत्र वर्तमानहोरास्वामिनो ग्रहस्यादौ दशा गम्य
कालमिता ज्ञेयेति तत्र कालहोरेशक्रमेण वर्षादि लवमिता न्येषान्दशा पुनस्सर्वेषां ग्रहाणां प्रान्ते वर्षे समाप्ते वर्तमानका
लहोरास्वामिन एव गतकालमिता दशा ज्ञेयेति एवं मासप्रवेशकालयोरन्तरस प्रमांशमिता मासप्रवेशे होरेश दिदशा
ज्ञेया तथैव दिनप्रवेशे होरेशादितो दिन दिनप्रवेशकालयोरन्तरस प्रमांशमिता घटिकादिदशा दिनप्रवेशे ज्ञेया अत्रापि
वर्तमानहोरेशस्य गतगम्यम्पूर्ववत्साध्यमिति अथ देवकीर्तिमतेन वर्षप्रवेशादौ होरादशानीतिक्रमुक्तावल्यामुक्ता
होराधारविसदृशास्तु गताश्री देवकीर्त्यभिधया होरास्वामिदशादिनान्यथ तनौ योहद्दपस्तत्क्रमात् मासेहद्दलवा
दिनानि खलु मासस्यादिने तत्प्रवेशसोद्धि भलवैर्मितो खलु दशा घट्यो ग्रहाणां स्मृताः ॥ लग्नेकयहद्दो शभुक्तभोग्यां
शसंगुणान्द्दशास्वामिन ३० भिर्भक्ता द्विधा ते गतगम्याके २ गम्या तुल्या तत्र दशा हद्देशस्यादिमा भवेत् ततः परः परे राम

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
| --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- |
| बृ<br>७२ | बु<br>७२ | शु<br>९६ | मं<br>८४ | बृ<br>७२ | बु<br>८४ | श<br>७२ | मं<br>८४ | बृ<br>१४४ | बु<br>८४ | बु<br>८४ | शु<br>१४४ |
| शु<br>७२ | शु<br>७२ | बु<br>७२ | शु<br>७२ | शु<br>९६ | शु<br>१२० | बु<br>९६ | शु<br>४८ | शु<br>६० | बृ<br>८४ | शु<br>७२ | बृ<br>४८ |
| बु<br>९६ | बृ<br>९६ | बृ<br>६० | बु<br>८४ | श<br>८४ | बृ<br>४८ | बृ<br>८४ | बु<br>९६ | बु<br>४८ | शु<br>९६ | बृ<br>८४ | बु<br>२६ |
| म<br>६० | श<br>६० | म<br>८४ | बृ<br>८४ | बु<br>७२ | मं<br>८४ | शु<br>८४ | बृ<br>६० | म<br>६० | श<br>४८ | मं<br>६० | म<br>१८ |
| श<br>६० | म<br>३६ | श<br>७२ | श<br>४८ | मं<br>७२ | श<br>२४ | मं<br>२४ | श<br>७२ | श<br>४८ | मं<br>४८ | श<br>६० | श<br>२४ |

धांस्तुर्येयावत्पुस्तकस्थिताः३ अङ्कतुल्य
दिनप्रख्यावर्षान्तेन्याग्रहहद्दजालग्न।
हद्देशतोहद्दादशाखाम्भ्रशकावधिः ४
यातेष्यमासांतरवासराद्यहस्यास्वरामा
वधिभोग्यभोगैः ननुस्वहद्दाधिपतिक्र
मतोव्योमानलैः ३० सम्विभजेद्दिनाद्यं ५॥
फलंयदाप्तंद्युसदां दशानांमानेभवेन्मा
सफलेस्फुटंस्यात् अत्रोदाहरणेतत्र
वर्षप्रवेशोस्यस्पष्टलग्नंराश्यादि ४।८।५३
।१० अत्रसंजातंत्वोक्तंमेषेगतंकोष्ठशोरे
षुभागाइत्यादिनाहद्दाशाहद्दादशागुणा
भौमादिपंचग्रहाणांवर्तमानहद्देष्व

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
| --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- |
| बृ<br>६ | शु<br>८ | बु<br>६ | मं<br>७ | बृ<br>६ | बु<br>७ | श<br>६ | म<br>७ | बृ<br>१२ | शु<br>७ | बु<br>७ | शु<br>१२ |
| शु<br>६ | बु<br>६ | शु<br>६ | शु<br>६ | शु<br>५ | शु<br>१० | बु<br>८ | शु<br>४ | शु<br>५ | बृ<br>७ | शु<br>६ | बृ<br>४ |
| बु<br>८ | बृ<br>८ | बृ<br>५ | बु<br>६ | श<br>७ | बृ<br>४ | बृ<br>७ | बु<br>४ | बु<br>४ | शु<br>८ | बृ<br>७ | बु<br>३ |
| मं<br>५ | श<br>५ | मं<br>७ | बृ<br>७ | बु<br>४ | मं<br>७ | शु<br>७ | मं<br>५ | मं<br>५ | श<br>४ | मं<br>५ | मं<br>९ |
| श<br>५ | मं<br>३ | श<br>६ | श<br>४ | मं<br>६ | श<br>२ | मं<br>२ | श<br>४ | श<br>४ | मं<br>४ | श<br>५ | श<br>२ |

वर्तनेनस्य भुक्तं ३।१७ भोग्यञ्च १।४३ मासेह दलवा दिनाद्युक्तस्याह वर्तमानदशा एव ह दास्यामि दशादिनानि तत्र भोग्य
दिनानि १।४३ मिता दशा आदौ गुरोस्ततः पुस्तकलिखितक्रमेणान्येषां दशादिनानि ७।३।२८ बु ६ शु ६ अन्ते भुक्तदिवस
मिता ३।१७ गुरोरेव दशा एवं सर्वत्र अथ दिनप्रवेशे लग्नराश्यादि ११।२।१७ अत्र वृषलग्ने अष्टांशमिता शुक्रदशागता
वर्तमानषडंशमिता बुधदशा भुक्तं ४।१७ भोग्यं च १।४३ बुधवर्षदशा ९ ७ २४ त्रिंशद्गुणं जातं बुधदशाभुक्तघटिका
त्मकं ८।३४ भोग्यञ्च ३।२६ यद्दशा स्विभुक्तभोग्यत्वं द्विगुणघटिका दिग्दशाभुक्तो भोग्यश्च भवति अत्र भोग्यघटिकात्मिका
सैव वर्तमानदशा स्वस्य बुधस्य दशा ३।२६ ततः पुस्तकलिखितक्रमेणान्येषां दशानां दशा द्विगुणाः दशा घटि
काः सू: गु: १५ शनेः १० भौमस्य ६ शुक्रस्य १८ अन्ते भुक्तघटिकादिका ८।३४ बुधस्य दशा एवं सर्वत्र अथैषां सौराणां द
शादिवसानां सौरसावनीकरणार्थं सुगमोपायस्तत्रैव हि प्रस्वशीलविम्बांशः १२७ पुनरेते दिवसाः स्युस्ताः पलेषु कृति
३१ भागाढ्या जायन्ते सौरसावनाः इति उदाहरणं शनिदशादिनानि सौराणि ८४ स्वर्षांशेलविम्बांशो दिनादिकः ०।२६।
५७ द्विघ्नः १।१३।२४ दशादिवसेषु ८४ पुनः ८५।१३।२४ पलेषु ३४ दशादिनानां ८४ कृतिभागेन पुनः २६ जाता निश
नि दशादिनानि ८५।१३।२६ सौरसावनानि एवं सर्वेषु दशादिवसेषु सौरसावनता कर्तव्येति अथ मासदशासौरसाव
नीकरणप्रकारान्तरं तत्रैवोक्तः वर्षा ३६५ केभागेन ३०।२६।१७ यद्दानसादनादशा मासः सूर्यसद्दिनादिकाः तदे
१५।३१

स्पमासांतरवासरैः कियन्मिताः प्रसाध्या इतिवात्रमासजाः अथवर्षेग्रहाणांनिसर्गदशानैवोक्ता राशीश्वराद्वीन्दुचले
ज्ञभौमविच्छुक्रजीवार्कपतङ्गजानांत्रिघ्नाः ३।३।३ द्वौ द्वनवकं २७ नखानि ६० धृतिः ५४ कृतिः ६० पूर्णशरा १५०। दि
नानिषडंशतुल्यास्तेनासांनाडिकाद्यु फलेदशाःभवेयुर्दिवसारंभवर्तमानमहद्दतः वर्षेचंद्रस्यसवलत्वेचंद्रराशौ।
शकमतोनिसर्गदशेश्वरास्युः वर्षदशायाद्वादशांशेनमासदशाज्ञेया वर्षदशाषडंशेनघटिकाद्यादिनदशाभवतिनै
सर्गिकदशावस्थाविधुवीर्याश्रयेस्मृताः तदादिमदशाभुक्तभोग्यंचन्द्रस्यपाद्ववेत् १ चंद्रराशीशभुक्तेष्यभागैर्निघ्नाचत
द्दशाखाग्निभक्तागतैष्यन्तदंतादौस्याद्दिनादिकंरवेंद्वेश्वरसमध्येतुतत्क्रमेणान्यखेटजा अत्रोदाहरणम् वर्षप्रवेशे
स्पष्टश्चंद्रः ०।२८।१०।३१ चंद्रराशीश्वरोभौमस्तस्यगम्यादि ८।१९।५१।८ अस्यैवाद्यादशादिनात्मिका ६ अथभौमभुक्तांशैः १९
५१।८ दशा ६ गुणिता ११९।४२।४८ भोग्यांशैश्च १०।२।५२ गुणिता ६०।१७।१२ त्रिंशद्भक्ताजातं गतं ३।५९।२५ गम्यञ्च २।०।७
दशामानम् तत्रादौभौमस्यगम्यादिनानिमितादशा २।००।३५ ततोबुधस्यदशादिनानि २७ शुक्रस्य ६० गुरोः ५४ रवेः ६०
॥१५० अंतेभौमस्यैवगतदिवसमिता ३।५९।२५ एतेस्थाप्याः एवंमासप्रवेशेपि दशाज्ञेया अथनैसर्गिकादिदशादि
वसानांमासेदिनेचस्पष्टीकरणमुक्तंतत्रैवनैसर्गिकायेदिवसानिकृताचौरीमतान्मासफलार्थमत्रगतैष्यमा १ ॥

सोनरसङ्गणास्तेखाग्नुहृतास्यष्टतराभवेयुः १ निरुक्तवच्चाद्यदशागतैष्यमाद्येनयोस्याद पितत्रमासेवलभद्गमतो
क्तानांगोरेवन्यष्टनामता प्राग्दशाभुक्तभोग्यत्तुकुर्याहर्षेदशोक्तवत् १ नैसर्गिकदशाहानांतद्वेवस्फुटीकृतः प्रा
ग्गतनंतुमासेतुयोन्निरुक्तवत् २ गतैष्यादिनविश्लेषनाडिकाद्यनुसारतः साध्यादिनफलेप्रोक्तात्क्रमेणाघटिको
शा ३ दिनप्रवेशेदिनप्रवेशलग्नवर्तमानहद्देशस्यादौनिसर्गवशाद्दशानक्रमेणान्येषान्दशादिनानित्तेयानि अथ
दशाफलविचारस्तत्रदशाफलविचारे विशेषफलमाहतेजस्सिंहः सम्यग्धियाद्द पदशाधिपयोश्च पूर्वेस्वाच्यमफ
लंतदनुजन्मखगाऽनुसारात् । वर्षोद्भवजनिभवश्चदशाविपाककालोन्त्यमत्रचवलत्रितयम्विमृश्यम् । स्वतोच्च
वर्षसमयेचदशाविपाककालेचयोवलयुतस्सकलापितस्याश्चवादशांत्वपरहद्वियुतस्सधातुस्थानादिमेदवश
पाकफलेन्दवीर्यान् । योजन्मनोहसवलोविवलोहकालेतन्कालमध्यमवलश्चदशान्तदीया । आद्यस्मृतालघुप
लाविफलापराहेज्ञेयाविपर्ययफलावलवैपरीत्येवर्षेचजन्मनिवलीविवलोविपाके पाकेवलीचविवलः प्रसवा
काले । कालत्रयेपिखलुमध्यवलास्त्रयोमीदातुस्समावहुफलेनचयेभाजातमा । योवीर्यवानजनुषिमध्यवल
र्षेवीर्योस्तिनाप्तिनदशासमयेदशायाः पूर्वेतुपूर्णफलदोल्पफलोपराहेकार्योविपर्ययविधिर्विपरीतवीर्ये
वि ह्रिसनस्त्रिसमयवहुदुःखदायीयावदलतुखचरस्यफलंतुनावत् । यावन्य हान्यधिगतस्सदशोवलीयान्तावत्तिवै

हा॰ र॰ ३९ फलस्तु सचाहवीर्योत् आधारमित्युज्वले निखिलग्रहाणामाहुर्बलस्य खलु दैवविदः पुराणाः तस्मात्तु भाशुभशशा
दूबलादिनोत्थं दद्युः फलं निजदशासु शुभाशुभं चेति अथ दशाफलविचारे विशेषमाह समरसिंहः वर्षपतिर्योत्र
नो वर्षदशायाञ्च स प्रभुः कथितः निजधातुनुसारवशान्तस्यादेशं फलं विदुषः तेजःसिंहोपि वर्षेश्वरो निखिलव।
र्षदशेश्वरोत्र प्रोक्तो बलाबलवशेन शुभाशुभं च धत्तेस्य धातुजफलं प्रथमं तेनाथ सम्याक्कालजनितं बलमस्य बोध्य
म् अयमर्थः वर्षे वर्षेश्वरस्यैव दशाफलं ज्ञेयम् अन्येषां ग्रहाणां निजदशामिते दिने वर्षेश दशायामेव दशाफलं ज्ञे
यम् एतत्स्पष्टमुक्तं तुकन्याभिर्विद्भिः वर्षस्वामिदशान्तरे निजफलस्याभ्योपि स्तस्मादशा इत्यचापि येन ग्रहेण वर्षे
शस्य प्रणालकरोति तस्यैव फलम्पूर्णं ज्ञेयम् अन्यस्य फलं किञ्चिन्न्यूनं ज्ञेयमिति समरसिंहः अथ सूर्यादीनां ग्रहाणा
ञ्चतुर्विधदशाफलानि ताजिकसारे ग्रन्थोक्तानि क्रमेणालिख्यन्ते राज्यलाभम्बलकान्तिवृद्धिं करोति भूपत्वमथो स
खित्वम् सुवर्णरत्नाम्बरभूमिलाभं दिवापतिः पूर्णबलो नराणाम् १ मानोदयं ग्रामपुरे सुदेशे वाणिज्यतो वा बहुलार्थ
लाभं दत्तेहि दारासुतमित्रभूपैः प्रीतिं नृणां मध्यबलो दिनेशः २ स्वबंधुमित्रस्वजनैर्विरोधं भ्रमोद्यं दीप्तिबलार्थ
नाशम् करोति नूनं स्वदशाप्रवेशे नापार्तिकृन्नष्टबलो दिनेशः ३ शत्रोर्भयम्वा नृपतेर्भयं च स्वजनोपघातं व्यथवे ध राम॰
नाशम् करोति रोगागमनं च शोकम्बलस्य पंचस्य बलो दिनेशः ४ लग्नात्रिलाभास्तिभस्थितोर्कौ निंद्योप्यसावर्धफलो दशायां ३९

पातिलसोमध्यबलश्शुभत्वंसम्पूर्णवीर्योतिशुभोनिरुक्तः ५ वामनः नृपतित्वंप्रधानत्वंतेजोहस्त्यश्ववाहनम् स्वद
शायाम्फलंचैवदत्तेपूर्णबलोरविः १ व्यापारन्तुपुरग्रामाणांद्रव्यलाभंसुखानि च स्वदशायाम्फलञ्चैवदत्तेमध्यबलोरविः
। २ रोगघातंभयंशोकंमृत्युंबंधनविग्रहेः नानानर्थान्महाशोकान्दत्तेनष्टबलोरविः ३ तेजोभ्रंशन्तथाघातनेत्रंबंधुशु।
विग्रहं स्वदशायाफलंचैवदत्तेनिर्बलोरविः ४ इत्यर्कः नृपास्पदत्वन्नृपतेर्हर्षनाप्तिंशत्रोर्विनाशंसुखमङ्गनञ्च सौराण्य
शुक्लोवरमौक्तिकाप्तिंकरोतिसम्पूर्णबलोमृगांकः १ वाणिज्यतोर्थागमनञ्चलोकेभूपत्व मन्त्रावरमित्रलाभम् दत्ते
स्वगोहाद्दत्तुलश्चसौख्यंधर्मोदयंमध्यबलोमृगांकः २ वैरंस्वमित्रैर्निजबंधुदारैस्सोवर्थनाशंप्रकरोति प्रीतिप्रश्नेश्वा।
दयम्बानककोद्दयञ्चकान्तिमयन्नष्टबलोमृगांकः ३ भिसाटनेक्लेशविवाददैन्यंधनप्रणाशंप्रकरोतिपुत्रैः वैरंकफा
निर्मन्नस्त्रिप्रमोहराज्ञीश्वरोदयबलोनराणां ४ लग्नात्रिविनाशयातोपिचन्द्रोनिधोहिदत्तेहदफलदशायाम् यानि
त्वसोमध्यबलश्शुभत्वंसम्पूर्णवीर्योतिशुभोनिरुक्तः ५ वामनः परप्राप्तिर्नृपाद्राज्यस्त्रीलाभंसुखसंपदं स्थान
प्राप्तिर्मनस्सौख्यंदत्तेपूर्णबलश्शशी १ वाणिज्यंसफलंकुर्यात्स्वगेहेपिमहासुखम् ज्ञातिप्राधान्यमैश्वर्यंदधा
न्मध्यबलश्शशी ५ देहेमांद्यंसुहृद्द्वेषमहाम्लानिधनक्षयम् मित्रवैरम्मनस्तापंदत्तेधमबलश्शशी २ तेजोहानि
महाक्लेशंशीतज्वरकरंपरम् कुर्यान्नष्टबलश्चन्द्रोदोस्थंपापसमाचरन ४ इतिचंद्रः सितिसुतस्सबलः एजनाधिपतनु

भूतं प्रकारोत्निशोजयमं कनकताम्रधनानि रत्नसैौविविधसौख्यपदन्नृपसंगमं ३ नृपजनैः कलहो भवति नेरनेभ
वति मध्यवलेस्ववलस्य यः परिकरोति तनो रुधिरामयं रिपुभयं सुतदारभयं नृणां २ विवादखलैर्विग्रहं पुत्रदारैः
सपत्नावैरितो भीतिमुग्रान्नराणां करोत्येव भौमो विनष्टो विनष्टफलं कुत्सकं चाल्पसौख्यं नितांतं ३ विघातार्थनाशस्व
भृत्यैर्विरोधं महासंगरे मृत्युकष्टं स्वदेहे कुजे स्वल्पवीर्ये खवीर्ये स्वनाशो भयं शत्रुतो रुक्पीडा नराणां ४ लग्ना
त्रिषष्ठायगतो महीजो निंद्योपि सोर्द्दःफलदो दशायाम् यातित्वसौ मध्यवलः शुभत्वं संपूर्णवीर्योतिशुभो नि रु
ऋः वामनः कुजः पूर्णवलो दद्यात्संग्रामे विजयश्रियम् दण्डनाथपदप्राप्तिः सेनानायक एव च मध्यवीर्य कु
कुर्यात्तेजस्वित्वं जयं रणे राज्यनंत्रस्य पत्यं च राज्यं वा लभ्यमेव च २ हीनवीर्ये कुजः कुर्याद्भङ्गःक्लेशं महागद
म् देहघातं तु वैकल्यं रक्तश्रावसुखान्नया ३ विवादं विग्रहं युद्धं संकटं च महाभयम् स्वदशायां फलं चैव ददाति स
वलः कुजः ४ इति भौमः सद्बुद्धिनार्थागमनं च राज्यसौख्यं सुहृत्साजिनवित्तमुग्रम् सम्पूर्णवीर्यान्वितसोमसूनु
र्दत्ते विलासं स्वजनैश्च भूत्यैः १ सद्बुद्धिवृद्धिसुतवित्तलाभविद्याविलासं स्वजनैश्च सौख्यम् सोमात्मजो मध्य
वलो दशायां दत्ते हि सौख्यं विविधैः प्रपंचैः २ कष्टं दरं च सौख्यवलार्थनाशं कीर्तिक्षयं भीतिमथार्तिमुग्रम् प्राप्नोति वैरं
स्वजनैश्च भृत्यैर्निन्द्यो विपाके खलु चन्द्रसूनुः ३ स्वजातिवैरं च दुःखसुपं कुर्याच्च लोके स्वहचाल्पसौख्यम्।

थैनाशं कुमतिं कृशत्वं दन्ते विशेषेण बुधो हि रन्धः धन्यं कारिं ज्ञानमनोन्यतो हि निन्द्योपि सोर्ई फल दो दशायाम्
याति त्वसौ मध्यबलस्तु भत्वं संपूर्णवीर्यो तिशुभो निरुक्तः ५ बामनः । सेवया सुखसंपत्ति धनलाभो महायशः । स्वबु
धाराज्यलाभञ्च कुर्यान्नृपो बलो बुधः १ धर्मसिद्धिस्तु कर्माप्तिरतुलां सुमतिं तनयाः पठनाश्रेखनाद्व्यन्द धान्म ।
ध्यबलो बुधः २ देशाद्देशान्तरप्राप्तिं धातुमन्धुकुलक्षयम् बंधनं वुद्धिदोषेणाद द्यान्निःपूबलो बुधः ३ माननाशं महाक
ष्टं धनहानिं महद्भयम् कलिं गेहे नयाकीर्तिन्दद्या द्धीनबलो बुधः ४ इति बुधः ऐश्वर्यलाभं नृपतेश्च मानं कान्तासु ज
मं राज्यसमागमञ्च दत्ते नराणां सबलस्सुरेज्यो हेमाम्बराद्यं विविधं — । विलासम् १ व्यापारतो योगमनेगुरुत्वं भूपा
स्सुहृत्सुतदारसौख्यम् प्राप्नोति मित्रात्स्वधर्मलाभं व्याचस्मृतिर्मध्यबलस्वपाके दारिद्र्यदुःखैः परिपीडिताङ्गः ध
मार्थनाशं रिपुजं भयञ्च स्त्रीपुत्रमित्रैः कलहं सुरेज्यो नष्टो विनष्टं प्रकरोति सर्वम् दुष्टाद्भयार्तिर्धनधर्मनाशं रिपो
र्भयं वा नृपतेस्तथैव सुखस्य मित्रसुते विरोधं करोति दग्धस्सुरराज्यपूज्यः लग्नात्षडष्टान्यमभिन्नसंस्थो निद्यो
गुरुस्स्याद्दफलो दशायां याति त्वसौ मध्यबलस्तु भत्वं संपूर्णवीर्यो तिशुभो निरुक्तः बामनः मण्डलस्वामितां तेजो नरं
द्रत्वमथापि वा धनमैश्वर्यमारोग्यं दद्याज्जीवो बलाधिकः विज्ञानशास्त्राधिगमं समाचार्यसन्नृपात्सुखं सौख्यराज्याधि
कारञ्च दद्यान्मध्यबलो गुरुः देहे रोगं मनस्तापं दारिद्र्यं धर्मनाशनम् पराभवं रिपोर्भीतिं दद्यान्न्यूनबलो गुरुः ।

धननाशंस्थाननाशमाधिव्याधिसमुद्भवम् दंतपीडां करोत्येवं वर्षेनष्टबलो गुरुः इति गुरुः राज्यं कलत्रं च सुखं विलास
रत्नं धनं काञ्चनभूपमानम् शुक्रस्य संपूर्णबलस्य पाके पुत्रोदयं मित्रसमागमं च स्त्रीप्रसन्नोर्थागमनं च सौख्यमि
ष्टान्नपानांबरसुंदरीश्च दैत्याधिपो मध्यबलो हि दत्ते गोवाजिचित्राम्बरवित्तलब्धिं इत्नस्तनसंभ्रमगं च पुंसां क
रोति विज्ञानयशोर्थनाशम् सहोत्थमित्रात्मजकामिनीभिः क्लेशं सितो नष्टबलो तिकष्टम् पुत्रस्त्रीरोगभयं च क
लहं सुखार्थनाशं स्वजनैर्विरोधं प्राप्नोति दग्धे भृगुजे नितांतं स्वमित्रदारादिभयं च पुंसां लग्नाद्यपाष्टारिगृहं वि
ना यदैत्याधिपशेषगृहे द्वेदः स्यात् निधोपि मध्यशुभकृन्निकृष्टः संपूर्णवीर्यो नितरां शुभप्रदस्स्यात् वामनः रा
जलक्ष्मीकलत्रं च पुत्रमित्रस्वभोग्यताम् तद्दशायां फलं चैवं दत्ते पूर्णबलो भृगुः १ इष्टवेशस्सर्वशास्त्रज्ञः स्वप
स्ताच्च महद्धनम् स्वदशायां फलं चैवं दद्यान्मध्यबलः सितः २ अमरात्रिफलासवास्त्रीप्रसादसुखं भवेत् स्वदशा
यां फलं चैवं दद्यादल्पबलः सितः ३ पुत्रशोकं गृहभ्रंशं पथिमृत्युं धनक्षयम् स्वदशायां फलं चैवं दत्ते नष्टबलो भृगुः
४ इति शुक्रः ददाति संपूर्णबलो कपुत्रो नीचाधिपत्यं गजवेरमलब्धिम् दुर्गादिसत्स्थानमथो सुखाप्तिं म्वाल[illegible]नव्यानि
पराङ्गनाप्तिम् १ खरोष्ट्रकोशादिकदुर्गरक्षां ग्रामे च रोध्यबलो नितांतम् करोत्यनर्थागमनं स्वकलत्रसुखार्थनाशं स्वज
नैर्विरोधम् २ धनस्य चौरभयाग्निभीतिं करोति वैरं स्वजनैश्च मित्रैः पतङ्गजो नष्टबलो नराणां सुखं न किंचित्स्वदशाप्र ५१

वेशे३वियोगदुःखैः परितप्तदेहमित्रार्थनाशंमरणंप्रकुर्यात् स्वरांशुजोरन्ध्रबलोनितान्तंदुःखंस्वदारैस्स्वसुतैर्नितान्त
म् ४ लग्नात्त्रिषष्ठायगतोर्कपुत्रोतिंद्योपिसाप्यर्धफलोदशायाम् यातिन्वसौमध्यबलंश्शुभत्वंसम्पूर्णवीर्योनिशु
भोनिरुक्तः १ वामनःन्यटनोदेशभूपत्वंभिन्नदेशाधिनाथता स्वदशायाम्फलन्त्वेवंवदन्तेपूर्णबलशनिः १ कोशगुप्तिः
खरोष्ट्राणांदुर्गमार्गोदिरक्षणम् स्वद्दशायाम्फलन्त्वेवंवदन्तेमध्यबलशनिः २ वियोगंविगतंह्याधिम्विकारान्मरु।
तोमृतिं स्वदशायाम्फलन्त्वेवंवदन्तेधम्मबलशनिः ३ नीचसेवागृहोद्वेगस्तथाचोरादुनःस्थयः स्वदशायाम्फल।
न्त्वेवंवदन्तेनष्टबलशनिः ४ इतिशनिः अथलग्नदशाफलमुक्तम् वर्षेतत्रेदशानतनोस्वामिफलेनतुल्यंफलंददा
तीत्यपरोविशेषः चरेफलामध्यशुभाधमाचद्विमूर्तिभेसाहिपरीनमृत्युम् अनिष्टमिष्टञ्चसमंस्थिरसैकमाहु
काणैः फलमुक्तमाद्यैःसत्स्वामियोगेक्षणतःशुभंस्यात्पापेक्षणात्कष्टफलंचवाच्यम् हायनोत्तमेपि पूर्वेत्रिभा
गेचरेशुभास्यान्मध्याद्वितीयेन्त्वधमातृतीये॥ स्थिरेत्वनिष्टाप्रथमेत्रिभागेशुभाद्वितीयेचसमातृतीयपूर्वेत्रिभा
गेद्वितनावनिष्टामध्याद्वितीयेशुभदातृतीये दशाविलग्नस्यबुधैर्निरुक्तात्रेयंफलत्वेशभवंत्रिभेदैरितिलग्नद
शाविशेषफलंहिलाजे हेमसुक्ताफलद्रव्यलाभमारोग्यमुत्तमम् कुरुतेस्वामिसन्मानंदशालग्नस्यचोत्तमा ला
भंकष्टेनवित्तस्यमैत्रीहीनस्यसेवनम् मनसाविकृतिंयातिदस्तमध्याविलग्नजा विदेशगमनंक्लेशंबुद्धिना।

हा॰ र॰ उ॰ ४२

शंकलिंव्यथां महाहानिस्त्वकुरुत्तेन ष्ठालग्नदशाफलम् क्रूरलग्नदशामध्ये सौख्यं स्वल्पं धनव्ययम् देहे दुःखं तथा।
कष्टं मातुलस्य च जायते। स्वामिमित्रशुभैर्दृष्टे लग्ने मध्यफलं भवेत् इति लग्नदशाफलम् अथ ग्रहाणां वर्षेशफलव
द्दशाफलमित्युक्तं तेजस्सिंहेन वर्षेश्वरत्वविषयेषु सदा यदुक्तं पूर्वं फलं निजदशासु तदेव चिंत्यम् अशुभमध्यमध
मं च बलानुसारात्सम्यक् ततो ग्रहबलं प्रथमं विचिन्त्यम्। इति ग्रहाणां दशाफलानि। अथान्तर्दशानयनं वर्षतन्त्रे॥ द
शामाने समामाने प्रकल्प्योक्तेन वर्त्मना। अन्तर्दशा साधनीया प्राक्पात्यांशवशेन तु आद्यावन्तर्दशा पाकपतेस्तत्क्रमतो
खिलाः। अयमर्थः॥ पूर्वं हीनांशवशेन पात्यांशाश्च॥ तिथ्यादिनास्तत्र पात्यांशयोगेन वर्षस्थानाभिषिक्तं दशामानं
भजेल्लब्धमन्तर्दशानयने ध्रुवको दिनादिकस्तेन ग्रहपात्यांशाः पूर्ववद्धो मूर्त्तिक्रयागुणिताः षष्ट्योपर्युपरि युता ग्रहस्या
न्तर्दशामानं दिनादिकं भवेत्॥ तत्र प्रथमं ततो महादशास्वामिन एवान्तर्दशा॥ ततो लिखितक्रमेणान्तर्दशामानं दशानन्त
स्सर्वोधिकांशग्रहानन्तरस्तु नरपि हीनांशक्रमेण महादशास्वामिपृष्ठपर्य्यन्तमन्तर्दशा ज्ञेया अत्रोदाहरणम्॥
तत्र शुक्रमहा॰ दशादिनाद्या ६७॥४२॥१७ इदमेव दशामानं वर्षस्थानाभिषिक्तं कल्पितं॥ तत्सर्वपात्यांशयोगेन अ
नेन २८॥१६॥३१ प्राग्वद्भक्तं लब्धो दिनादिस्सर्वेग्रहाणामन्तर्दशाध्रुवकः ३।१२।२८।३० अनेन शुक्रस्य पात्यांशाः ७। राम
।२८ गुणिताः षष्ट्योपर्युपरि युताः जाता दिनाद्या शुक्रदशायां शुक्रान्तर्दशा २२। ५१। १३।२६ एवं सर्वेषामप्यन्तर्दे ४२

हा॰र॰ ३॰ ४२

हुनाप्तिंसुतमित्रसौख्यं दत्तेशशांकस्य दशाप्रवेशे प्राप्ता दशा देवपुरोहितस्य लाभं नृपाद्राजजनात्सुहृत्त्वं सत्पुत्रमित्रा द
हुलार्थलाभम् शौक्रीदशा चंद्रदशाप्रवेशे कुर्याच्छरीरे परमां च पुष्टिं स्ववांधवैर्मित्रसुतैश्च वैरं शत्रूदयं कांतिवलार्थनाशं
।करोति चंद्रस्य दशाविपाके पाको हि मंदस्य कलत्रकष्टं इति चंद्रदशायामन्तर्दशाफलं - धनागमकांचनभूमिलाभं प्रपो
षणं मित्रसुतादिकानां दशा खरांशोर्धरणीसुतस्य दशाविपाके प्रकरोति सौख्यम् हिरण्यनारीरजतार्थलाभं करोति
सौख्यं विजयं रिपूणाम् ताराधिनाथस्य दशाप्रयाता भौमस्य पाके तु शुभानुरागं असद्व्ययं मित्रसुतैर्विरोधं भयं रिपूणा
मसुखं नराणां करोति भौमस्य दशाविपाके शशांकसूनोर्विविधं च कष्टम् सुखार्थनाशं निजमित्रकष्टं करोति नूनं स्वजा
नैर्विरोधम् क्षमाभोजनं भूमिसुतस्य पाके दशाप्रपन्ना सुरपूजितस्य ४ खलैर्विवादं स्वजनैर्विरोधं रोगोदयं राजभयं रिपूणा
म् करोति शुक्रस्य दशाप्रवेशे कुजस्य कष्टं बहुलं नराणाम् ५ वसुप्रपीडां प्रकरोति पुंसां पापास्पृहक्रूरान्तु भयं सितो शा
नुः शौरेर्दशा भूमिसुतस्य पाके यदि प्रयाता स्वजनैर्विरोधम् ६ इति भौमः मानार्थलाभं प्रकरोति पुंसां लाभं सितो शान्त्व
जनाच्च सौख्यम् प्राप्ता हि सूर्यस्य दशा दशायां सौम्यस्य नित्यं विविधं विलासम् १ कष्टं शरीरे निजवंधुवैरं सौख्यार्थनाशं
च भयं क्षितीशात् वातव्यथा चंद्रदशा प्रपन्ना चान्द्रेर्दशायां प्रकरोति नित्यम् २ व्रणोदयं च दद्रुविचर्चिकादिं सुखार्थ राम
नाशं बहुलं च कष्टम् करोति सौम्यस्य दशाविपाके दशा हि भौमस्य परैर्विवादम् ३ आरोग्यनाशं धुजनेषु सौख्यं भो ४२

त्विन्नाद्विजदेवसेवाम् दशाप्रदादेवगुरोः प्रयाता चान्द्रे दशायाम्प्रकरोतिमानम् ४ रौप्याम्बरस्थानञ्चतुष्पदानांलाभ
ञ्चसौख्यम्विविधंविलासम् शौक्री दशा सौम्यदशाविपाके प्राप्ताप्रतिष्ठाम्प्रकरोतिपुंसाम् ५ वातात्रिकत्कफमनल्परोगं
कांतेर्विनाशंनृपतेर्भयञ्च सौम्यस्यपाके यदि सूर्यसूनोर्दशाप्रयाता बहुवित्तनाशम् ६ इतिबुधः स्त्रीपुत्रमित्रैर्वि
विधाम्विलासम्प्रपूजनन्देवगुरुद्विजानाम् शत्रोर्विनाशंप्रकरोतिभानोर्दशाप्रयाताचगुरोर्दशायाम् १ माणिक्यमु
क्ताफलहेमलाभंसौख्यानिधत्तेविविधानिपुंसाम् चान्द्री दशाजीवदशाविपाके सर्वार्थलाभम्विपुलन्नितान्तम् २॥
मानंनृपाद्राजजनात्सुहृत्त्वंरिपोर्विनाशंप्रकरोतिलाभम् वित्तस्यभौमस्यदशादशायांगुरोर्नराणांबहुलंसुखञ्च
यशः प्रणाशस्वजनैर्विरोधंकरोतिमिथ्याकलहंस्वदारैः शशाङ्कपुत्रस्यदशाप्रयातागुरोर्दशायामसुखञ्चकष्टम्॥
वातोदयंवानकफोदयञ्चधर्मार्थनाशंरिपुरोगभीतिंभृगोर्दशाजीवदशाविपाके नृणाम्विधत्ते नृपतेर्भयञ्च परेवि
रोधंबहुलञ्चकष्टंकफोदयन्धर्मधनस्ययञ्च सौरीदशाजीवदशाविपाके नृणाम्विधत्ते नृपतेर्भयञ्च इतिगुरु
दशायामंतर्दशाफलं दुष्टाङ्गयंभूमिपतेर्भयंचपित्रोरयंदेहबलार्थनाशं भानोर्दशादैत्यगुरोर्दशायांनृणांविधत्ते
परमञ्चकष्टं स्वल्पार्थलाभंकफशीतपीडास्वमित्रदारैःस्वजनैश्चपुत्रैः क्लेशंचदत्तेभृगुजस्यपाके दशाचनाराधिप
तेः प्रमोहम् वेश्यानुरागंचविपक्षभीतिंवातासृग्धर्मधनस्यपञ्च दशाचभौमस्यभृगोर्दशायांप्राप्ताचतुसान्नसुखंकदाचित्

सुहृद्विद्द्विद्विजदेवभक्तिंविद्याविनोदंप्रभुतांचकीर्तिम् लाभञ्चशुक्रस्यदशाप्रवेशेबोधीदशास्त्रीजनितञ्चसौख्यमहिरण्यवस्त्राम्बर
भोजनानालाभन्नृपात्सुरूपेसुहृत्त्वम् पाकेभृगोर्दैवपुरोहितस्यदशाप्रपन्नाप्रकरोतिद्रोहस्ववर्गेषुपरैर्विनोदंसुखार्थलाभप्रक
रोतिपुंसाम् प्रमादनिद्राकलहदशापाशुक्रस्यमादीमहदीशनाञ्च इतिशुक्रदशायामन्तर्दशाफलम् क्लेशप्रवासभयमिष्टहानिंकरो
तिवैरंसुतमित्रदारैः शनेर्दशायाञ्चरवेर्दशायांकरोतिपीडापरमांशरीरे कष्टेनलाभन्त्वसुखञ्चमात्युह्रोगदुःख
विविधकरोति आलस्यनिद्राभयसुग्रवैरन्वाद्रीदशाभास्करपुत्रपाके क्लेशागमंसौख्यधनार्थनाशंकुधर्मसिद्धि
पशुपुत्रहानिं कौजीदशासूर्यसुतस्यपाकेकरोतिवैरन्निजबन्धुमित्रैः सुखार्थलाभन्निजपुत्रमित्रैः प्रीतिञ्चिधत्तेविवि
धविलासम् मन्दस्यपाकेशशिनन्दनस्यदशानराणान्नृपसङ्गमञ्च ४ धर्मानुरागंविजयन्नराणान्नृपप्रसादम्बहुलञ्च
लाभं शौरेर्दशायांभिषणस्यजातादशासुखार्थागमनंकरोति ५ स्वरार्चनंब्राह्मणदेवभक्तिंसुखार्थलाभन्नृपतेः
सुहृत्त्वम् ॥ ॥ शौक्रीदशासूर्यसुतस्यपाकेकरोतिपुंसाञ्चिविधाश्चभोगान् ॥ ॥ ६ ॥ ६ ॥ इतिशनाव
न्तर्दशाफलम् अथलग्नेशस्यान्तर्दशाफलमेवलग्नदशान्तर्दशाफलंतत्तपमिति अथशुभाशुभसूचकान्तर्दशावामनेनो
क्ताः चन्द्रारजीवा १ बुधजीवशुक्रा २ दिवाकरेन्दू ३ रविजस्तथुक्राः ४ रवीन्दुशुक्रा ५ बुधजीवमन्दा ६ जीवस्तशुक्रा ७ रवि
नः क्रमात्सुः १ एवमन्तर्दशायाश्चपाचकाशुभदाग्रहा अन्येत्वशुभदाज्ञेयाएवञ्चविदशाफलमिनिः अथगौर्यमतेनदशा

नयनेमहादेवमतेनच गोरीमतादशाजन्मर्क्षमासदिनानिदिने षडंशादशाद्येया वर्षेद्वादशांशोमासः महादेवमनेआ
दीनः३ वर्षेदशादिनानिशेराशिदिनप्रवेशेदशाघटीरूपानेचदशानयनमुक्तंमुक्तावस्याम् जन्मनक्षत्रनःप्रोक्तादशागौ
रीमताह्वया सूर्येन्दुकुजराह्वीज्यशनिज्ञशिखिभागीवाः १ दशेशावन्हिभान्तेपाक्रमात्रिःपरिवर्तनात् सुदशास्विस
स्तेषांधृति १८ स्त्रिन्शत्ति ३० मूर्छना२१ २ वेदेषवो ५४ नागहता ४८ मुन्यद्दा ५७ सिनिशायकाः ५१ मूर्छना २१ष
त्रि ६० रेतेभ्योद्वादशांशेनमासजाः ३ षडंशतुल्यास्त्वेतासांनाडिकाद्याफलंदशाः अथवारुद्रनक्षत्रात्रित्रिभिर्भै
र्दशेश्वराः ४ एतदेवमवंतीतिमहादेवेनभाषितम् अथगौरीमतोक्तस्यदशाक्रमस्यदशादिमायाभवशाद्रुपेना साभुक्तभो
ग्यर्क्षघटीविनिघ्नासर्वर्क्षनाडीविहृतादिनाद्यंद्विधायदाप्रत्विहभोग्यभुक्तंतस्यग्रहस्यैवलिखेदधस्तात् दशाप्र
माणं परतोग्रहाणांयथास्थमग्रेपिलिखेदधोधःप्रांतेपुनर्भुक्तघटीसमुत्थदिनाद्यमायस्यलिखेत्स्वगासेति उदा
हरणम् कस्यापिरोहिणीजन्मनक्षत्रंसारोहिणीचंद्राधःस्यात्रतःप्रथमवर्षेचंद्रस्यदशाद्वितीयवर्षे भौमस्यततो
यवर्षेराहोर्दशा एवमग्रेपिज्ञेयम् अथास्यजन्मनिरोहिणीनक्षत्रस्यभुक्तघटिकाः ४० भोग्यघटिकाः २० तत्राष्टमवर्षप्रवेशेशुक्रदशा
जातानस्यादिनानि ६० भुक्तघटी ४० घटीगुणानि २४०० सर्वर्क्षघटीभक्तानि ४० जातानिशुक्रदशाभुक्तदिनानि ॥ अथदशादिनानि ६० भोग्य २०
गुणानि १२०० सर्वर्क्षघटी ६० भक्तानिजातानिशुक्रदशादिनानितत्राष्टमवर्षेआदौशुक्रदशाभोग्यदिनतारं २० ततोरवेः १८ ततश्चंद्रस्य

३ हारिद्र्यपापध्वंसनं रोगेभ्योपि परिच्युतिः विलासम्विविधं धर्मक्रियान्त स्मरमानसमुध पित्तज्वरे च रोगादीन्दे हन्या
गं च भार्गवः मातृपितृभयञ्चैव वित्तानाम्व्ययएव च ५ शनिर्नृपाद्भयं स्त्रैन्यं वैरिवृद्धिं धनक्षयम् त्रर्थनाशो न्यदेशेषु
गमनं गौरवाल्पता ६ शत्रुराजकुलाद्भीतिरनर्थो बहुधाभवेत् इति रविमुहूफलम् चान्द्र्यां स्त्रीसुतभूलाभो वस्त्राभरणा
संयुतं स्वपक्षवैरकन्यायाजन्मनिद्रारतिस्तथा १ इंदोर्दशायां मार्तण्डे विजयारोग्यसंपदः भौमे चौराग्निकोशनाशो
रक्तपित्तादिकान्गदान् २ चंद्रजे वित्तगुरगलाभो वित्तगुरवोनि च धनालंकारहस्त्यश्वमकस्मात्सुरपूजिते स्त्रीसु
खञ्च सुसङ्गन्त्व शुक्रे लेकारलब्धयः रोगव्यसनशोकाश्च बंधुनोभिभवः शनौ वन्हिशोकभयं घोरं वधू द्वेगं ध
नक्षयम् स्त्रियो लाभं स्त्रियो हानिं केतावन्तर्गते विधौ: इति चंद्रमुहूं भौमे शत्रुविमर्दश्च विग्रहो बांधवैः सह रक्तपित्त
कृता पीडा परस्त्रीभिस्समागमः भानौ भौमदशान्तस्थे प्रचण्डस्साहसी जयी चन्द्रे सुखसुहृद्वृद्धि मणिमौक्तिकसंच
यः बुधे पित्तोद्भवा पीडा नाशो वैरिभयम्महत् गुरौ भूपति मित्रत्वं सुहृत्वासक्तचित्तता शुक्रे रणाद्भयम्व्याधिव्यसा
नानि धनह्रयः शनौ दिने दिने दुखमसह्यं व्यसनागमम् कर्मार्थनाशमुद्वेगं बंधुचौरादिकम्भयम् स्वनाशो देहपीडा च केता
वंतर्गते कुजे इति कुजमुहूर्तम् बौध्यां बंधुसमायोगो मित्रधर्मसमागमः प्रीतिर्जनस्य विपुला रेहपीडा त्रिदोषजा चांद्रे
दशायाः ख्यास्त्रौ दिनि स्वर्णाम्बराप्तयः चन्द्रे विचर्चिका कुष्ठराजरोगादिकं भयम् भौमे क्लेशश्शिरोरोगो बंधुवैरम्महद्भयं

गुरौ रोगादिभिर्युक्तो भृगौ राज्यसुगन्धिमान् शनौ पापसुखासक्तः प्रचण्डो मदनोद्धतः वेधुना शोमनस्तापो देहत्यागो प
नक्षयः सुहृद्बंधुसुतैर्द्वन्द्वो केतौ मित्रकलिर्भवेत् इति बुधसुदृम् जैव्या मान धनप्राप्तिर्देवब्राह्मणपूजनम् कर्णराग
स्तथा वैरं स्वजनैश्च कलिर्भवेत् सुखी गुरुसेमवांश्च सूर्ये जीवदशाङ्गेन चन्द्रे बहुविधा लब्धिर्निर्जितारिर्महीसुतेश्च
रोपि सेवी चण्डश्च परितापी सुखी कुजे पित्रोर्भक्तिसुहृद्युक्तो नीरुक्सुखयुतो बुधे शुक्रे चिन्ता हृतिश्च ब्राह्मणाश्च
जीवनम् पराङ्गनादिसंसक्तः शनौ मुखधने हृतः धवेधुहृषो मृषावादस्वामिभिः सुनिराश्रयः इति गुरुसुदृम् शौ
क्या स्त्रीसङ्गमो लाभो वस्त्राभरणसंयुतः कौशल्यम्महतो कीर्तिर्धनलाभश्च जायते १ रवौ सितदशान्तस्थे वन्यन रा
मयः कामलम्मोलि दशनन खरोगकलानि धोरभौमेशु पद्वो भूमिनाशपित्तरुजो सरुक् बुधे धनहर्षिभूलाभसुख
भूलाभकः ३ जीवे धनसुखं देशसंपत्तिः शीलधर्मकौ हृद्वां गना रतिः शौरे रिपुसौम्याधिकारिताध मृतिर्भयकृते शो
कदुःखप्राप्तिर्नसंशयः अग्निदाहो ज्वरो घोरः कन्याजन्मस्त्रियोऽच्युतिः ५ इति शुक्रसुदृम् शनैश्च योऽन्देहपीडापु
त्रदारैश्च विग्रहः तन्द्राश्रमो बुद्धिनाशो विदेशगमनं भवेत् १ पुत्रार्थमित्रस्त्रीनाशो रशायाम्भास्करे शनेः स्त्रीहनम्व
न्धुविश्लेषः कलिर्मृत्युसुधाकरे २ भौमे दुःखं सुजोदशन्या गोव हुविधेश्चता बुधे सुखे सुभगता सत्कारश्च जयो ध राम
नम् ३ जीवे समुचितं सौख्यं पुरग्रामगणेशता अनेककामिनीमित्रयशोवित्तानि भार्गवे ४ वन्धुद्वेगश्च सा दुःख ४६

मर्थनाशम्महद्भयम् अग्निदाहो ज्वरो घोरः कन्याजन्मांगनासुखं ५ इतिशनिसुहृत्म् स्वर्भानौ जायते दुःखं बंधूनामात्मनो स्त्नः
देशांतरे सुगमनं धननाशो रविग्रहः १ राहोर्दशायां भार्याया विपत्तिर्वा धवस्य च: अर्थनाशोन्यदेशे सुगमनं क्षौरवात्मता
२ अशुभं वान्यजं दैन्यं व्याधिंभीतिं सुतक्षयं करोति सिंहिकासूनो र्भानुरन्तर्दशांगतः ३ वन्हिशोकभयं घोरं बंधूद्वेग।
मनक्षयं करोति सिंहिकासूनोर्विधुरन्तर्दशांगतः ४ कामार्थनाशमुद्वेगं बंधुचौरादिकं भयम् करोति सिंहिकासूनो भूमि
जोन्तर्दशांगतः वंधुनाशमनस्तापं देशत्यागं धनक्षयम् करोति वहुदुःखानि राहोरन्तर्दशां बुधः ६ ॥ वंधुद्वेषं मृषावा
दं सेव्यं वधुनिराश्रयं करोति सिंहिकासूनोर्गुरुरन्तर्दशांगतः ७ वंधुद्वेषं महादुःखं अर्थनाशो महद्भयम् शरीरक्ले
शमाप्नोति राहोरन्तर्गते सिते ८ मृत्तिभयकृतिक्षोकं दुःखप्राप्तिर्नसंशयः करोति सिंहिकासूनोः शनिरन्तर्दशांगतः।
९ इतिराहुसुहृम् केतोर्दशायां स्याद्दाहो देहस्य पुत्रस्य यो सुखं शत्रुराजकुलाद्भीतिरनर्थो वहुधा भवेत् १ अग्निदाहोज्वरो
रो घोरः कन्याजन्मस्त्रियाश्च्युतिः केतोरन्तर्गते सूर्ये राज्ञा सह कलिर्भवेत् २ अर्थनाशोर्थलाभश्च सुखं दुःखं च जाय
ते स्त्रीलाभश्च स्त्रियोहानिः केतोरन्तर्गते विधौ ३ प्रजया सह संवादश्चौरवन्ह्यारिजं भयम् स्वनाशो देहपीडा च केतो
रन्तर्गते कुजे ४ चौरैर्वा शत्रुभिर्युद्धं देहत्यागोभिजायते देहपीडा ज्वरस्तीव्रः केतोरन्तर्गते बुधे ५ द्विजेन्द्रैस्सह सं
प्रीतिर्नृपपूज्यैरमर्षिभिः कुलक्षोपसुतोत्पत्तिः केतोरन्तर्गते गुरौ ६ केतोरन्तर्गते शुक्रे विप्रैस्सहकलिर्भवेत् वातपित्त।

कनापीडागोत्रजैस्सह विग्रहः ७ विंदेशगमनन्दुःखं केनोरन्तर्गतेशानौसु
हृद्धन्धुसुतैर्द्वन्द्वोभूनिमित्तंकलिर्भवेत् इष्टैश्वरणसम्वादो ह्यहोकेत्व
न्तरङ्गतो। इतिकेतुमुद्दम्। इतिमुद्दादशाविचारे सर्वेग्रहाणांमुद्दान्तर्द
शास्समाप्ता ॥ अत्रस्वदशाफलमेवस्वान्तर्दशाफलंज्ञेयम् अथयत्रग्र
हाणामनुक्तंतत्राद्यश्लोकेनपूर्वोक्तग्रहारिष्टमग्रहफलंज्ञेयमितिविशेषः
समाप्तायंगौरीमंतर्दशामुद्दाभिधामहादेवमतदशाफलमेनदेवतेयम् अ
थरामतेदशानाजिकमुक्तावल्याम् वलएममता द्वैराच्चतुस्त्रिभिरिहक्र
मात् दशेशानस्व२० पंचाशत्५० भानि२७ शैलेषवः५७ सुरा३३॥१॥ अं
गानि ६३ खाब्धयः ४० पूर्णशैला७० स्तद्दिवसामता: वर्षप्रवेशनस्स
त्रादशेयंरामसम्मता २ वलोदिनोयस्यदशाग्रहस्यपाद्यादशास्याद्रवशा
दिनाद्याचतुस्त्रिनक्षत्रपतेर्भजिताखभप्रमितैयेकक्रमस्यभुक्तिः३याचर्त
मानोस्यतुभस्यभुक्तिःसातद्भभेक्यघटीविनिघ्ना भाज्याथतद्दसगतैष्यना

अथगौरीमतदशासुग्रहाणामन्तर्दशाचक्रं योग: ॥०॥

| सू १८ १८ | चं ३० ४१ | मं २१ ६९ | रा १४ १२३ | बृ ५८ १७४ | श ५७ २२८ | बु ५१ २७१ | के २१ ३०० | शु ६० ३६० |
|---|---|---|---|---|---|---|---|---|
| ४ | ८ | ५ | ७ | १० | ६ | ९ | | ६ |
| सू १।१२ | चं ४।०० | मं १।४५ | रा ६।१० | बृ ८।०० | श ५।४२ | बु ७।१९ | १।८ | शु ६।०० |
| चं ५।२४ | मं २।३० | रा २।२७ | बृ ९।०७ | श ४।४८ | बु ८।२२ | के ४।१५ | शु २।०६ | सू ५।०० |
| मं १।३० | रा ३।३० | बृ ३।२० | श ५।२६ | बु ७।१२ | के ४।१४ | शु ५।९ | सू १।२४ | चं ८।०० |
| रा २।१२ | बृ ५।०० | श २।१२ | बु ८।१६ | के ४।०० | शु ५।४२ | सू ३।२४ | चं २।४८ | मं ५।०७ |
| बृ ३।०० | श ३।०० | बु ३।१४ | के ४।३० | शु ४।४९ | सू ३।४५ | चं ६।४९ | मं १ | रा ७।०० |
| श १।४८ | बु ४।३० | के १।४५ | शु ५।२४ | सू ३।१२ | चं ६।२४ | मं ४।१५ | २।७ | बृ १०।१० |
| बु २।४२ | के ३।२० | शु २।६ | सू ३।३६ | चं ६।२४ | मं ४।४५ | रा ५।४७ | बृ ३।२० | श ६।०० |
| के १।३० | शु ३।०० | सू १।२४ | चं ७।१२ | मं ४।१० | रा ६।४९ | बृ ८।२९ | श २।१ | ९।०० |
| शु २।४८ | सू २।०० | चं ३।४८ | मं ४।३० | रा ४।१० | बृ ९।३० | के ५।१६ | [illegible] | .. |

ड़ीयोगेन लब्धो गतगम्यकेन ४ युते विधेये गतगम्यभानां भुक्त्यादि नाड्यो गतगम्यके स्तः प्राक्पाकनाथस्य चरस्य तस्य गम्य
प्रमाणादिदशादिनाद्या ५ परा: परेषां ह्युसदां यथा स्यात्प्रान्ते पुनर्जातमितादिमस्येति ६ उदाहरणम् वर्षप्रवेशे
पुष्यनक्षत्रं तेनादौ सूर्यदशा जाता दिनाद्या २० अथ यद्दशा चतुर्नक्षत्रशा अतो दशादिनानि चतुर्भुक्तानि लब्धा ५।
एकैकनक्षत्रस्य दिनाद्या भुक्तिः अथ पुष्यनक्षत्रस्य भुक्तघटीभि १२ भस्य भुक्ति ५ गुणिता ६० सर्वर्क्षघटी ६० भ
क्ता लब्धा पुष्यस्य गता भुक्तिर्दिनात्मिका १ इयं तन नक्षत्रयो राद्री पुनर्वस्वोर्भुक्त्या १० युता ११ जाता रवेर्गतदशा अ
थ पुष्य घटीभि ४८ भभुक्ति ५ गुणिता २४० सर्वर्क्षघटी ६० भक्ता ४ लब्धा पुष्यस्य गम्या भुक्तिः इयं गम्यभस्याश्लेषा
भिधस्य भुक्त्या ५ युता ९ जाता रवेर्गम्यदशा तत्रादौ रवेर्गम्यदशादिनात्मिका ९ ततश्चंद्र
स्य ५० भौमस्य २६।।४० बुधस्य ५६।४० शनेः ३३।।२०
।गुरोः ६३।।२० राहोः ४० शुक्रस्य ७० पुनः प्रान्ते गत
दिनमिता ११ रवेर्दशा ज्ञेयेति अत्र प्रकारान्तरं वर्ष
फलप्रदीपे वर्षप्रवेशदिनभेननाडी निघ्नादशा।
द्यस्य खषट्विभक्ता फलं दिनाद्यं हि दशागता सा।

| सू | चं | म | बु | गु | शु | श | रा | योगः |
|---|---|---|---|---|---|---|---|---|
| आ ४ | म २ | ह ४ | अ २ | पू ५ | ध ३ | उ ४ | कृ ४ | २० |
| २० ० | ५० ० | २७ ० | ५७ ४० | ३३ २० | ६३ २० | ४० ० | ७० ० | ३६० |
| १ ४० ० | ४ १० ० | २ १२ २० | ४ ४३ २० | २ ४० ४० | ५ १६ ४० | २ ३० ० | ५ ५० ० | मास दशा दिनानि |

| सू | चं | म | बु | गु | शु | श | रा | योगः। |
|---|---|---|---|---|---|---|---|---|
| ३ | ८ | ५ | ९ | ५ | १० | ६ | १३ | ६० दिन |
| २० | २० | ६ | २६ | ३३ | ३३ | ४० | ४० | दशा |
| ० | ० | ० | ०० | २० | २० | ० | ० | घटयः |

तद्बुनिता चस्य दशान्तदेष्या वर्षप्रवेशे प्रथमं दशा सा ततः क्रमेणैवमिहेतरेषाम् वर्षस्य चांते प्रथमस्य यातादशा भवेद
द्धफलस्य सिद्धौ वर्षप्रवेशे दिनभं च यस्मात्तस्याधिपस्याद्य दशा भवेत्सा ततस्तु नक्षत्र दशाक्रमेण दशा भवेयुः
सदसत्फलाप्तये अथ जन्मकालाभावे जन्मराशिवशाद्दशानयनमुक्तं तत्रैव जन्मकालाद्यभावश्चेत्कोपिजन्मभ
तो विदुः तदेव प्राच्यते पुंसां शुभं तद्वार्षिकं फलम् १ जन्मन्यर्कदशा ततो विधुदशा यावद्धितीयो रविस्थिर्के दशाव
सराशशिदशा भौमस्य पाकस्ततः वसुस्थितिदिनं ततो बुधदशा यावत्तु नस्योरविः षष्ठे चाब्धिदिनं ततन्त्र स्यानि दशा सप्त
स्थिते सप्त च २ ततो दशेज्यस्य च यावदष्टनवस्थितेर्के दशवासरास्तु ततस्तु राहोर्दशमे च सूर्ये विंशद्दिनं सा तु ततः सित
स्येति भ अत्रान्तर्दशानयनं फलसहितमुक्तं तत्रैव दशासपाके निहिताखषड्गरामै ३६० ईतालब्धफलं दिनाद्यम् अन्त
र्दशास्तु स्वदशाक्रमेण फलानि तासां कथयाभि चात्र १ अथ फलम् नृपतेर्भयमंगुपमपीडा स्याद्रक्तपित्तजा क
रोति धननाशं च स्वदशान्तर्गतो रविः १ इदमेव दशाफलं ज्ञेयम् अल्पावासेन लाभस्स्यात्संग्रामे जयस्तथा आ
रोग्यं स्त्रीसुखं चैव रवेरन्तर्गते विधौ २ आरोग्यं स्त्रीभवं सौख्यं ज्ञयोरक्ताम्बरागमः अनुद्वेगेन लाभस्स्याद्भोमे यी
दशान्तर्गते ३ धनहानिर्विरोधस्स्यात्पीडा सोपद्रवादिभिः धनव्ययो हि सूर्यस्य दशान्तस्थो हि वा धने ४ मातृपीडा नृपा
तिरुदरामयपीडनम् कुष्ठवस्तुद्रवा हानिस्सूर्यस्यान्तर्गते शनौ ५ सुखेन कार्यसिद्धिस्स्याद्धनलाभो महाभवेत् अ

न्यो राज्यसन्मानो गुरौ सूर्य्यदशान्तरे ६ कलहो मित्रपुत्राद्यैः कार्य्यहानिर्नृपाद्भयम् सेवकेभ्यो व्ययश्चैव राहौ सूर्य्यदशा
ङ्गते ७ मोहेन निर्बलत्वञ्च स्त्रीविरोधं धनव्ययं क्वचित्सौभकरोत्यर्कदशायां भार्गवो गतः ॥ ८ ॥ इत्यर्कदशायामन्त
र्दशाफलम् लाभस्स्याच्छुभवस्तूनां कनकाद्यासलाभकः स्त्रीरतिः श्लेष्मकोपश्च स्वदशान्तर्गतो विधुः रक्तपित्त
प्रकोपश्च परैश्च कलहो भवेत् फलानां व्यवहारस्स्याद्धौमे चंद्रदशाङ्गते चतुष्पदादिलाभस्स्यादल्पद्रव्यस्य लाभ
कः कलह स्त्रीसुताद्यैश्च चंद्रान्तर्गतवो धने श्लेष्मपीडा वीर्यहानिश्शूलपीडा भयन्तथा पितृमातृविरोधः स्याच्छ
नौ चन्द्रदशाङ्गते वस्त्राऽभरणलाभस्स्याल्लाभः सौख्यवस्तुनः मान्यता स्वजनेभ्यश्च चंद्रस्यान्तर्गते गुरौ निष्कारण
तश्चोद्वेगो देहे पीडा तथा व्ययः सेवकाश्रयसंयातो विधोरन्तर्गते तमः स्त्रीसुखं श्वेतवस्तूनां लाभश्चैव राजमाननाम् श
त्रौ नीशकरोत्याशु चंद्रान्तस्थो हि भार्गवः शत्रुसंयोगनृपाल्लाभो मान्यता सौख्यमुत्तमम् वस्त्रालंकारलाभस्स्यादर्के चंद्रद
शाङ्गते इति चंद्रः रक्तपित्तकृता पीडा रिपुभ्योऽपि भयं भवेत् सन्निपातोद्भवा पीडा स्वदशान्तर्गते कुजे १ पित्ताधिक्यं वि
रोधस्स्यान्मित्रपुत्रादिभिस्तथा धनव्ययं क्वचिल्लाभो भौमस्यान्तर्गते बुधे २ विरोधो बान्धवैस्सार्धं धननाशोऽङ्गपीडनम्।
सन्निपातादिका पीडा शनौ भौमदशाङ्गते ३ कार्योपक्रमलाभौ च संग्रामाद्विजयस्तथा धनागमस्सुहृन्मान्यो गुरौ भौम
दशांगते ४ अग्निचौरादिजा पीडा मनश्चिन्ता व्ययस्तथा लाभहानिः क्वचिद्वैरं भौमस्यान्तर्गते तमः ५ चौराग्निभयमन्यु

गंव्यथाधिक्यमनुद्यमम् मनश्चिंता करोत्येव भौमस्यांतर्गते भृगुः ६ सहायात्कार्यसिद्धिस्याल्लाभो राज्ञो महान्भवेत्
सुखञ्च सुहृत्प्राप्तिः सूर्ये भौमदशागते ७ जनेन कार्यसिद्धिस्यात्सुखं पुत्रादिभिस्तथा वैरिनाशो धनप्राप्तिश्चन्द्रे भौम
दशाङ्गते ८ इति भौमः स्त्रीसुखं राजसन्मानः कार्यसिद्धिस्तथा भवेत् बुद्धिः प्रपञ्चना लाभस्स्वदशान्तर्गते बुधे क
होवायुपीडा स्याद्दन्ये स्सह धनक्षयः अपवादो मनस्तापो शनौ बुधदशागते २ सुवर्णपट्टकूलादिलाभः कर्पूर
मवः सुहृत्समागमश्चैव बुधस्यान्तर्गते गुरौ ३ बुद्धिनाशो मनस्तापस्स्वल्पलाभो धनव्ययः सुहृद्नृपतिवैरञ्च रा
हुबुधदशागते ४ स्त्रीपक्षात्स्वल्पलाभस्स्याद्राज्ञो लाभो महान्भवेत् मनवस्त्रनरप्राप्तिर्बुधस्यान्तर्गते भृगौ ५ ॥
सौख्यं स्वजनबंधूनां मित्रपुत्रादिसंगमः वैरिनाशो जयः प्राप्तिः सूर्ये सौम्यदशागते ६ रक्तपित्तादिपीडा स्यात्सैवे
स्वशरीरके स्त्रीयोगे कलहश्चैव चंद्रे सौम्यदशागते ७ शिरोव्यथा यशूलस्यात्पीडा स्यात्तु धनक्षयः विग्रहः
ताद्वैश्च भौमे बुधदशागते ८ इति बुधः कुटुम्बकलहो मित्रैर्विरोधो धनसंहतिः नृपचौरभयं चैव स्वदशान्तर्गते श
नौ १ आरोग्यता महाल्लाभो महद्भिः सह संगमः द्विजदेवगुरौ भक्तिः शनेरन्तर्गते गुरौ २ चौरवैरिनृपाद्धापि धनस्यो
दरपीडनम् दुःखं करोति मोघश्च शनेरन्तर्गते तमः ३ वैरिभ्यो विजयश्चैव भृत्येभ्योपि धनागमः स्त्रीसौख्यं मित्रसा
फल्यं शुक्रे शनिदशागते ४ कुटुम्बकलहश्चैव धनधान्यसंचव्ययः ईषन्मनसि चिंता स्यात्सूर्ये शनिदशागते ५।

चतुष्पदादिलाभः स्याद्दरिनाशो नृपाद्भयम् स्त्रीसुखं दुःखनाशश्च चंद्रे शनिदशांगते ६ रक्तपित्तप्रकोपस्स्यात् क
लहो वा धवेस्सह धनधान्यव्ययश्चैव शनेरंतगते कुजे ७ कलहो मित्रपुत्राद्यैर्विरोधश्चैव सर्वदा शत्रुभ्यो भयमेत्यु
गं बुधे मंददशागते इति शनिः कार्यसिद्धिर्नृपान्मान धनधान्यादिसंपदः प्रमेहभवपीडा स्यात्स्वदशांतगते गुरौ १ द
द्रुकंडुप्रकोपश्च रक्तकोपः प्रमेहजः बलहानिस्त्वर्थनाशो राहावीज्यदशागते २ शुक्रस्यापि फलं राहुफलवद्गुरुवद्र
वेः स्त्रीसुखं संततेस्सौख्यं गुरोरंतर्गते विधौ ३ चिंतितस्य च कार्यस्य सिद्धिः स्याच्च धनागमः शरीरारोग्यकं चैव भौ
मे जीवदशांगते ४ बुधस्यापि फलं भौमफलवच्चाथवा शुभी: वृद्धिनाशो व्ययश्चैव शनौ जीवदशांगते ५ इति गुरुः
परदेशगमश्चैव चौरेभ्योपि महद्भयम् मानहानिः शस्त्रपीडा राहो निजदशांगते १ अर्थलाभः कार्यसिद्धिः शुक्रे राहु
दशांगते ज्वरातिसाररोगश्च राहोरंतगते रवौ चंद्रस्य राहुवच्चाद्यैर विवर्द्धो मजस्फलम् बुधस्य शुक्रवच्चाद्यं राहुवच्च
शनेः स्मृतम् ३ समो लाभव्ययो चैव मित्रशत्रुसमागमः मिश्रं चैव फलं वाच्यं गुरौ राहुदशांगते ४ इति राहुः स्त्रीसौख्यं नृ
पमानः स्याद्गोपाश्वादिसमागमः श्वेतवस्त्रोत्सवारोग्यं स्वदशांतर्गते भृगौ १ धनेन कार्यसिद्धिस्स्याद्राजसन्मान
मेव च महती प्रीतिरारोग्यं रवौ शुक्रदशांगते २ स्त्रीसुखं श्वेतवस्त्रूनां लाभं वै राजमानता करोति शत्रुनाशं च चंद्रे शुक्र
दशांगते ३ कश्चिद्दुःखं कश्चित्सौख्यं कश्चिल्लाभः कश्चिद्यशः प्राप्नोति पुरुषो नित्यं चंद्रे शुक्रदशांगते इति वा पा दः सं १

हार. ३ ५०

नापः कलहश्चैव पित्तकोपः समागमः शत्रूणां रक्तकोपश्च भौमे शुक्रदशांगते ५ कंडूरक्तादिपित्तञ्च विस्फोटो हेमसंभ-
वः धनधान्यव्ययश्चैव शुक्रस्यान्तर्गते बुधे ६ अकस्माच्च धनप्राप्तिः परेभ्यो हीनवस्तुतः लाभः स्याद्भार्गवस्यान्तर्दशायदि
शनेस्तदा राज्यप्राप्तिर्द्रव्यलाभः स्वल्पायासेन कर्म च सफलञ्च भवेच्छुक्रदशामध्ये गुरोर्यदा ८ स्वजनैश्च विरोध
स्स्याद्व्ययश्चोदरसंभवः शूलरोगो व्ययश्चैव राहौ शुक्रदशांगते ९ इति शुक्रः इति राममतदशायामन्तर्दशा समाप्ता अ
थोत्पन्नानां दशाकरणानां विषयविभागो निरूप्यते ग्रन्थान्तरे बली यदा हीनबलो ग्रहः स्यात्तदा तु हीनांशदशा विधे-
या सर्वग्रहाश्चोकनलब्धवीर्ये तेनोत्तसीरख्यदशा प्रदिष्टा १ लग्नस्य सबलत्वे हि भावपूर्वोत्तु सा मता कालहोराद
शा कार्या सवीर्ये हेचतन्यतो २ हद्दाख्या वर्षलग्नस्य हद्देशे बलसंयुते अब्दचंद्रबलोपेते कुर्यान्निसर्गिकी दशा ३
सवीर्ये जन्मराशीशे मुद्दा गौरीमतेन तु बलसाम्ये तु सर्वेषां नसीराख्या प्रकीर्तिता ४ सवीर्ये चंद्रराशीशे बलरामाख्यया
मता सर्वेन भोगाः प्रेसन्ते ननुभावदशा तदा ५ तत्र वर्षे सवीर्ये स्याद्धीनांशग्रहस्य सबलत्वेन दा हीनांशदशा विधेया
सर्वे ग्रहे हद्देलग्नेन नसीरदशा २ लग्नस्य सबलत्वे भावनसीरदशा ३ वर्षप्रवेशसमये कालहोरेशस्य सबलत्वे कालहोरा
दशा ४ वर्षप्रवेशलग्नहद्देश्वरस्य सबलत्वे हद्दादशा ५ चंद्रस्य सबलत्वे निसर्गदशा ६ वर्षे जन्मराशीश्वरस्य सबलत्वे
गौरीमना दशा मुद्दाख्या ७ वर्षे चंद्रराशीश्वरस्य सबलत्वे बलराममतादशा विधेया ८ सर्वेषां बलसाम्ये बलोपेतस्या

म. ५०

शस्त्रोथवा रिष्टं करोति रिपुराशिगः छिद्राच्चैराशिपः शोध्यः सप्तनिर्मृत्युसद्मके तत्काले वीर्यसंयुक्त मरिष्टं जायते ध्रुवम् त
त्काले वीर्यहीनश्च विलग्नाधिपतिर्यदा व्ययारिच्छिद्रगश्चेत्स्यात्तदारिष्टं प्रजायते दशाधिपो वीर्ययुतः प्रवेशे त्रैराशि
केशोपि युतः शुभैश्च दृष्टस्त्रिकोणोपचयस्थितश्चेत्तदाशुरिष्टं विलयं प्रयाति ॥इति श्रीबलभद्रकृते हायनरत्ने दशा
नयनाधिकाराध्यायः॥ अथ मासप्रवेशानयनम् तत्प्रयोजनमाह यादवः समाफलं व्यासमासकाभ्यां समीरितं तन्मा
सफलं विनानन् नाभात्यनायासकरं ध्रुवेतः स्सयुक्तिमासानयनं फलं च १ ताजिकालंकारेपि शरद्धिपतिसुखदाधी
शोभा शरदपि मासफलैर्विनान भाति शरद्धिपमराजिमालनाथानचरुचिमेति फलेष्वपुष्पितागाः २ अथ मासप्रवे
शोपयुक्तमहर्पसूर्याद्यानयनं लिख्यते तत्राहर्पानयनम् स्वाभीष्टशकात्तु समीपशाकं विशोध्य शेषांकः शकांककयो
र्द्वयोः अधस्थवारादिक संयुतिर्भवेदृष्टाधिपो वारमुखः समादौ १ मेषसंक्रान्तितिथ्यानयनं प्रथमाध्याये प्रोक्त
मेव अथाहर्गणानयनम् मेषसंक्रमदिनाद्गतमासास्त्रिंशताविनिहितादिनयुक्ताः स्वाब्धिनर्केलव ६४ वासर
हीनाजायते दिनगणोहर्पपूर्वः १ अथ मध्यमार्कानयनम् द्युगणस्त्रिंशता ३० भक्तो मासाः शेषदिनानि च तत्र
त्यग्रहसंयोगः क्षेपयुक् मध्यमोरविः १ सूर्ये रुद्रा ११ भ २७ कुबाणा ५१ नवाग्नी ३९ क्षेपकोमतः रेखास्वदेशान्तरयो ना
निनिजोपि ९ हीनानि विलिप्तिकास्तुः देशान्तरं स्यात्परवारुणं प्राक् पश्चाद्धनं मध्यरविस्स्वदेशे एकान्ते मध्यमार्के

